।। शिवाभ्यां नमः ।।

## ।। कृष्णद्वादशमञ्जरी ।।

दुराशान्धोऽमुष्मिन् विषय विसरावर्त जठरे
तृणच्छन्ने कूपे तृणकबळलुब्धः पशुरिव।
पतित्वा खिद्येऽसावगतिरित उद्धृत्य कलयेः
कदा मां कृष्ण त्वत्पदकमललाभेन सुखितम्।। १

कथञ्चिद्यच्चित्ते कमलभवकामान्तकमुखाः
वहन्तो मज्जन्ति स्वयमनवधौ हर्षजलधौ।
क्व तद्दिव्यश्रीमच्चरणकमलं कृष्ण भवतः
क्वचाहं तत्रेहा मम शुन इवाखण्डलपदे।। २

दुरापस्त्वं कृष्ण स्मरहरमुखानां तदपि ते
क्षतिः का कारुण्यादगतिरिति मां लालयसि चेत्।
प्रपश्यन् रथ्यायां शिशुमगतिमुद्दामरुदितं
न सम्राडप्यङ्के दधदुरुदयस्सान्त्वयति किम्।। ३

प्रतिश्वासं नेतुं प्रयतन धुरीणः पितृपतिः
विपत्तीनां व्यक्तं विहरणमिदं तु प्रतिपदम्।
तथा हेयव्यूहा तनुरियमिहाथाप्यभिरमे
हतात्मा कृष्णैतां कुमतिमपहन्या मम कदा।। ४

विधीशाराध्यस्त्वं प्रणयविनयाभ्यां भजसि यान्
प्रियस्ते यत्सेवी विमत इतरस्तेषु तृणधीः।
किमन्यत्सर्वापि त्वदनभिमतैव स्थितिरहो
दुरात्मैवं ते स्यां यदुवर दयार्हः कथमहम्।। ५

विनिन्द्यत्वे तुल्याधिकविरहिता ये खलु खलाः
तथाभूतं कृत्यं यदपि सह तैरेव वसतिः।
तदेवानुष्ठेयं मम भवति नेहास्त्यरुचिर-
प्यहो धिङ्मां कुर्वे किमिव न दया कृष्ण मयि ते।। ६

त्वदाख्याभिख्यानत्वदमलगुणास्वादनभवत्-
सपर्याद्यासक्ता जगति कति वानन्दजलधौ।

न खेलन्त्येवं दुर्व्यसनहुतभुग्गर्भपतितः
त्वहं सीदाम्येको यदुवर दयेथा मम कदा।। ७
कदा वा निर्हेतून्मिषित करुणालिङ्गित भवत्-
कटाक्षालम्बेन व्यसनगहनान्निर्गत इतः।
हता शेषग्लानिन्यमृतरसनिष्यन्दशिशिरे
सुखं पादाम्भोजे यदुवर कदासानि विहरन्।। ८
अनित्यत्वं जानन्नतिदृढमदर्पस्सविनयः
स्वके दोषेऽभिज्ञः परजुषि तु मूढस्सकरुणः।
सतां दासश्शान्तस्सममतिरजस्रं तव यथा
भजेयं पादाब्जं यदुवर दयेथा मम कदा।। ९
कराळं दावाग्निं कबळितवतादेव भवता
परित्राता गोपाः परमकृपया किन्न हि पुरा।
मदीयान्तर्वैरि प्रकरदहनं किं कबळयन्
दयासिन्धो गोपीदयित वद गोपायसि न माम्।। १०
न भीरारुह्यांसं नदति शमने नाप्युदयते
जुगुप्सा देहस्याशुचिनिचयभावे स्फुटतरे।
अपि व्रीळा नोदेत्यवमतिशते सत्यनुपदं
क्वमेस्यात्त्वद्भक्तिः कथमिवकृपा कृष्ण मयि ते।। ११
बलीयस्यत्यन्तं मदघपटली तद्यदुपते
परित्रातुं नो मां प्रभवसि तथा नो दमयितुम्।
अलाभादार्तीनां इदमनुगुणानामदयिते
कियद्दौस्थ्यं धिङ्मां त्वयि विमतमात्मद्रुहमिमम्।। १२

।। इति श्री श्रीधरवेङ्कटाशार्य विरचित कृष्णद्वादशमञ्जरी समाप्ता ।।